# पुनरावर्तनम्

- तमेनमन्वजायन्त – रामानन्तरं त्रयः कुमाराः तदनुरूपगुणवीर्याः जाताः
- भरतस्तेषु – कैकेयीसुतः भरतः, सुमित्रासुतौ लक्ष्मणशत्रुघ्नौ च जातौ
- एते ववृधिरे वीरा – चत्वारः कुमाराः लोकहितङ्कराः प्रवृद्धाः
- अथ कदाचित् – दशरथस्य आस्थानं प्रत्यागतो विश्वामित्रः

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- तदनु, यथा-विधि, कृत-सपर्येण, मर्यादा-अतीत-महिम्ना, महितेन, गाध-इतर-हृदयेन, गाधि-नन्दनेन, सत्र-परित्राणार्थम्, इत्थम्, अभ्यर्थितः, अभूत्
- तदनु = तदनन्तरम्, विश्वामित्र-दशरथयोः मेलनानन्तरम्
- अभ्यर्थितः अभूत् = प्रार्थितः
- कः अभ्यर्थितः? [दशरथः]

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- केन अभ्यर्थितः ? गाधिनन्दनेन = गाधिसुत्रेन विश्वामित्रेण
- कीदृशेन गाधिनन्दनेन ? यथाविधि कृतसपर्येण, मर्यादातीतमहिम्ना, महितेन, गाधेतरहृदयेन
- यथाविधि = शास्त्रानुगुणम्, कृतसपर्येण = पूजितेन / पाद्य-अर्घ्य-आचमनीय-आसनादिभिः सत्कृतेन इत्यर्थः

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- मर्यादातीतमहिम्ना = अपरिमित-माहात्म्य-शालिना
- महितेन = पूज्येन
- गाधेतरहृदयेन = गम्भीरचेतसा
- किमर्थम् अभ्यर्थितः? सत्रपरित्राणार्थम् – सत्रस्य = यज्ञस्य, परित्राणार्थम् = रक्षणार्थम्
- कथम् अभ्यर्थितः ? इत्थम् = वक्ष्यमाणप्रकारेण

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
- तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ (बाल. १९.४)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam-Value Education-Technology

## तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- अन्वयः - तदनु यथाविधि कृतसपर्येण, मर्यादातीतमहिम्ना, महितेन, गाधेतरहृदयेन, गाधिनन्दनेन [दशरथः] सत्रपरित्राणार्थम् इत्थम् अभ्यर्थितः अभूत् ।
- तात्पर्य्यम् – दशरथः विश्वामित्रं विधिवत् पूजितवान् । ततः पूज्यः, अपरिमितमाहात्म्यशाली, गम्भीरमनस्कः विश्वामित्रः यज्ञस्य रक्षणार्थं दशरथम् एवं प्रार्थयामास ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- यथाविधि – विधिम् अनतिक्रम्य । अव्ययीभावसमासः – अव्ययम् ।
- कृतसपर्येण – कृता सपर्या यस्य सः । “पूजा नमस्या-अपचितिः सपर्या-अर्चा-अर्हणाः समाः” (अमरः)
- मर्यादातीतमहिम्ना – मर्यादाम् अतीतः, मर्यादातीतः महिमा यस्य सः । नकारान्तः, पुं, ३.१ ।

# तदनु यथाविधि कृतसपर्येण मर्यादातीतमहिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थमभ्यर्थितोऽभूत् ।

- गाधेतरहृदयेन – गाधात् इतरम्, गाधेतरं हृदयं यस्य सः, तेन
- गाधिनन्दनेन – गाधेः नन्दनः, तेन
- सत्रपरित्राणार्थम् – सत्रस्य परित्राणम्, तस्मै । "सत्रमाच्छादने यज्ञे"
- अभ्यर्थितः – अभि + "अर्थ उपयाच्ञायाम्" + क्त (कृत्)
- अभूत् – "भू सत्तायाम्" – लुङ्, प्रथम.१

राजन् भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।

- राजन्, भवतः, तनयेन, विनय-अभिरामेण, रामेण, शर-आसन-मित्रेण, सौमित्रि-मात्र-परिजनेन, क्रियमाण-क्रतु-रक्षः, रक्षः-दुरितम्, उत्तीर्य, कृत-अवभृथः, भवितुम्, अभिलषामि, इति

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

राजन् भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।

- राजन् – हे नृप!
- अभिलषामि = इच्छामि
- किम् अभिलषामि? कृतावभृथः भवितुम् = यज्ञं समाप्य दीक्षान्तस्नानं कर्तुम्
- किं कृत्वा? उत्तीर्य = तीर्त्वा

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

राजन् भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।

- किम् उत्तीर्य? रक्षोदुरितम् = राक्षसरूपं विघ्नम्
- कीदृशः सन्? क्रियमाणक्रतुरक्षः = संरक्ष्यमाणयज्ञः
- केन क्रियमाणक्रतुरक्षः? रामेण

राजन् भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।

- कीदृशेन रामेण? भवतः तनयेन, विनयाभिरामेण, शरासनमित्रेण, सौमित्रिमात्रपरिजनेन
- भवतः = दशरथस्य, तनयेन = पुत्रेण
- विनयाभिरामेण = विनयगुणभूषितेन

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

राजन् भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।

- शरासनमित्रेण – शरासनम् = धनुः, तस्य मित्रेण = सुहृदा । चापधारिणा इत्यर्थः
- सौमित्रिमात्रपरिजनेन = लक्ष्मणेन केवलम् अनुसृतेन

# राजन् भवतस्तनयेन...

- अन्वयः - राजन्, विनयाभिरामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन भवतः तनयेन रामेण क्रियमाणक्रतुरक्षः रक्षोदुरितमुत्तीर्य कृतावभृथः भवितुम् अभिलषामि इति ।
- तात्पर्य्यम् – हे नृप! विनयगुणभूषितेन, चापधारिणा, लक्ष्मणसहायेन भवतः पुत्रेण रामेण संरक्ष्यमाणयज्ञः सन् अहं राक्षसरूपं विघ्नम् अतीत्य यज्ञं समाप्य दीक्षान्तस्नानं कर्तुम् इच्छामि ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# राजन् भवतस्तनयेन...

- स्वपुत्रं राजशार्दूलं रामं सत्यपराक्रमम् ।
- काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ (बाल. १९.८)
- शक्यो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
- राक्षसा ये विकर्तारः तेषामपि विनाशने ॥ (बाल. १९.९)
- श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ।
- त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ (बाल. १९.१०)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# राजन् भवतस्तनयेन ...

- तनयेन – “आत्मजः तनयः सूनुः सुतः पुत्रः” (अमरः)
- विनयाभिरामेण – विनयेन अभिरामः, तेन
- शरासनमित्रेण – शरस्य आसनम्, शरासनस्य मित्रम्, तेन (अथवा, शरासनं मित्रं यस्य सः, तेन) । “धनुः-चापौ धन्व-शरासन-कोदण्ड-कार्मुकम्” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# राजन् भवतस्तनयेन ...

- सौमित्रिमात्रपरिजनेन – सौमित्रिः एव, सौमित्रिमात्रं परिजनः यस्य सः । सुमित्रायाः अपत्यं पुमान् सौमित्रिः – सुमित्रा + इञ् (तद्धितः)
- क्रियमाणक्रतुरक्षः – क्रतोः रक्षा, क्रियमाणा क्रतुरक्षा यस्य सः
- रक्षोदुरितम् – रक्षांसि एव दुरितम् । "यातुधानः पुण्यजनो नैर्ऋतो यातु-रक्षसी" (अमरः)

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# राजन् भवतस्तनयेन ...

- उत्तीर्य = उद् + "तॄ तरणे" - ल्यबन्ताव्ययम्
- कृतावभृथः – कृतः अवभृथः येन सः
- अभिलषामि – अभि + "लष कान्तौ" – लट्, उत्तम.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam ·Value Education

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितमतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- एतत्, आकर्ण्य, कर्ण-परुषम्, महर्षि-भाषितम्, अति-मात्र-पुत्र-वात्सल्यात्, कौसल्या-जानिः, सशल्य-अन्तःकरणः, अभूत्
- सशल्यान्तःकरणः अभूत् = विदीर्णहृदयः अभवत्
- कः सशल्यान्तःकरणः अभूत् ? कौसल्याजानिः = दशरथः
- किं कृत्वा ? आकर्ण्य = श्रुत्वा

Samskritam - Value Education

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितम् अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- किम् आकर्ण्य ? एतत् महर्षिभाषितम् = पूर्ववर्णितं विश्वामित्रवचनम्
- कीदृशं महर्षिभाषितम् आकर्ण्य ? कर्णपरुषम् = श्रोत्रकठोरं
- किमर्थं सशल्यान्तःकरणः अभूत् ? अतिमात्रपुत्रवात्सल्यात् = अपरिमितात् सुतस्नेहात्

Vyoma || वाचं धेनुमुपासीत || Samskritam - Value Education

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितम् अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- अन्वयः - एतत् कर्णपरुषं महर्षिभाषितम् आकर्ण्य अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणः अभूत् ।
- तात्पर्य्यम् – "पुत्रं रामं राक्षसनाशाय प्रेषय" इत्येवंरूपं कर्णकठोरम् ऋषिवचनं श्रुत्वा अपरिमितेन पुत्रस्नेहेन दशरथः विदीर्णहृदयः अभवत् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितम् अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- स तं निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ।
- शोकेन महताविष्टः चचाल च मुमोह च ।
- लब्धसंज्ञस्ततोत्थाय व्यषीदत भयान्वितः ॥ (बाल १९-२१)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितम् अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- आकर्ण्य – आ + "कर्ण भेदने" - ल्यबन्ताव्ययम्
- कर्णपरुषम् – कर्णस्य परुषम् । "कर्ण-शब्दग्रहौ श्रोत्रम्" (अमरः)
- महर्षिभाषितम् – महान् ऋषिः । महर्षेः भाषितम् ।
- "ऊर्ध्वरेताः तपस्युग्रः नियताशी च संयमी । शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः"

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# एतदाकर्ण्य कर्णपरुषं महर्षिभाषितम् अतिमात्रपुत्रवात्सल्यात् कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।

- अतिमात्रपुत्रवात्सल्यात् – मात्राम् अतिक्रान्तम् । अतिमात्रं पुत्रवात्सल्यं, तस्मात्
- कौसल्याजानिः – कौसल्या जाया यस्य सः । “जायाया निङ्” ।
- सशल्यान्तःकरणः – शल्येन सहितं सशल्यम् । सशल्यम् अन्तःकरणं यस्य सः ।

# ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- ततः, तस्मिन्, बहु-प्रकारैः, अवार्य-निश्चये, भगवति, विश्वामित्रे, दशरथः, तपन-कुल-हितेन, पुरोहितेन, एवम्, अभिहितः, अभूत् ।
- ततः = तदनन्तरम्
- अभिहितः अभूत् = उक्तः
- कः अभिहितः? दशरथः

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- केन अभिहितः? पुरोहितेन = कुलगुरुणा वसिष्ठेन
- कीदृशेन पुरोहितेन? तपनकुलहितेन = सूर्यवंशस्य हितकारिणा
- कदा अभिहितः अभूत्? तस्मिन् भगवति विश्वामित्रे बहुप्रकारैः अवार्यनिश्चये (सति)
- भगवति = पूज्ये

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- बहुप्रकारैः = नानाविधैः उपायान्तरैः
- अवार्यनिश्चये – अवार्यः = निवारयितुम् अशक्यः, निश्चयः = निर्धारः यस्य तादृशः
- विश्वामित्रे
- दशरथेन बहुधा प्रार्थितोऽपि विश्वामित्रः श्रीरामः एव नेतव्यः इत्यात्मनः निश्चयं न परिवर्तयामास ।

# ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- अन्वयः - ततः तस्मिन् बहुप्रकारैः अवार्यनिश्चये भगवति विश्वामित्रे दशरथः तपनकुलहितेन पुरोहितेन एवम् अभिहितः अभूत् ।
- तात्पर्य्यम् – नानाविधैः समाधानान्तरैरपि विश्वामित्रे स्वनिर्धाराद् अविचाल्ये सति, राजा दशरथः सूर्यवंशस्य हितकारिणा कुलगुरुणा इत्थम् उक्तः ।

ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- ऊनषोडशवर्षो मे रामो राजीवलोचनः । न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ (२०.२)
- इमे शूराश्च विक्रान्ताः भृत्या मेऽस्त्रविशारदाः । योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ (२०.४)
- अहमेव धनुष्पाणिः गोप्ता समरमूर्द्धनि । यावत् प्राणान् धरिष्यामि तावत् योत्स्ये निशाचरैः ॥ (२०.५)
- यदि वा राघवं ब्रह्मन् नेतुमिच्छसि सुव्रत । चतुरङ्गसमायुक्तं मया सह च तं नय ॥ (२०.९)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।

- अवार्यनिश्चये – अवार्यः निश्चयः यस्य सः, तस्मिन्
- अवार्यनिश्चये भगवति विश्वामित्रे – सतिसप्तमी
- तपनकुलहितेन – तपनस्य कुलम् । तपनकुलस्य हितः, तेन । “भानुर्हंसः सहस्रांशुः तपनः सविता रविः”
- अभिहितः – अभि + “डुधाञ् धारणपोषणयोः” + क्त (कृत्)

# सङ्क्षेपः

- तदनु यथाविधि – विश्वामित्रः दशरथमुद्दिश्य ब्रवीति
- राजन् भवतस्तनयेन – भवतः पुत्रस्य लक्ष्मणसहितस्य रामस्य साहाय्येन यज्ञं पूरयितुमिच्छामि
- एतदाकर्ण्य कर्णपरुषम् – विश्वामित्रवचनं श्रुत्वा भीतः दशरथः
- ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये – विश्वामित्रस्य निर्धारे अविचाल्ये सति दशरथमुद्दिश्य वसिष्ठस्य वचनम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in












- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in